

## एकादशः पाठः

# leok;ksfg ntZ;



पुरा एकस्मिन् वृक्षे एका चटका प्रतिवसति स्म। कालेन तस्याः सन्ततिः जाता। एकदा कश्चित् प्रमत्तः गजः तस्य वृक्षस्य अधः आगत्य तस्य शाखां शुण्डेन अत्रोटयत्। चटकायाः नीडं भुवि अपतत्। तेन अण्डानि विशीर्णानि। अथ सा चटका व्यलपत्। तस्याः विलापं श्रुत्वा काष्ठकूटः नाम खगः दुःखेन ताम् अपृच्छत्–''भद्रे, किमर्थं विलपसि?'' इति।

चटकावदत्–''दुष्टेनैकेन गजेन मम सन्ततिः नाशिता। तस्य गजस्य वधेनैव मम दुःखम् अपसरेत्।'' ततः काष्ठकूटः तां वीणारवा-नाम्न्याः मक्षिकायाः समीपम् अनयत्। तयोः वार्तां श्रुत्वा मक्षिकावदत्–''ममापि मित्रं मण्डूकः मेघनादः अस्ति। शीघ्रं तमुपेत्य यथोचितं करिष्यामः।'' तदानीं तौ मक्षिकया सह गत्वा मेघनादस्य पुरः सर्वं वृत्तान्तं न्यवेदयताम्।



मेघनादः अवदत्–''यथाहं कथयामि तथा कुरुतम्। मक्षिके! प्रथमं त्वं मध्याह्ने तस्य गजस्य कर्णे शब्दं कुरु, येन सः नयने निमील्य स्थास्यति। तदा काष्ठकूटः चञ्च्वा तस्य नयने स्फोटयिष्यति। एवं सः गजः अन्धः भविष्यति। तृषार्तः सः जलाशयं गमिष्यति। मार्गे महान् गर्त्तः अस्ति। तस्य

© NCERT not to be republished

अन्तिके अहं स्थास्यामि शब्दं च करिष्यामि। मम शब्देन तं गर्तं जलाशयं मत्वा स तस्मिन्नेव गर्ते पतिष्यति मरिष्यति च।'' अथ तथा कृते सः गजः मध्याह्ने मण्डूकस्य शब्दम् अनुसृत्य महतः गर्तस्य अन्तः पतितः मृतः च। तथा चोक्तम्–

**'बहूनामप्यसाराणां समवायो हि दुर्जयः'।**

## शब्दार्थाः

| | | | |
|---|---|---|---|
| **पुरा** | – | पहले, पुराने समय में | ago |
| **शुण्डेन** | – | सूँड से | by trunk |
| **नीडम्** | – | घोंसले को | nest |
| **विशीर्णानि** | – | नष्ट हो गए | destroyed |
| **तमुपेत्य** (तम्+उपेत्य) | – | उसके पास जाकर | approaching him |
| **मध्याह्ने** | – | दोपहर में | at noon |
| **निमील्य** | – | बन्द करके | closing |
| **स्थास्यति** | – | रुक जाएगा | will stay |
| **स्फोटयिष्यति** | – | फोड़ देगा | will spoil |
| **तृषार्तः** (तृषा + आर्तः) | – | प्यास से पीड़ित | thirsty |
| **गर्तः** | – | गड्ढा | pit |
| **तथा कृते** | – | वैसा करने पर | doing so |
| **अनुसृत्य** | – | अनुसरण करके | following |
| **पतितः** | – | गिर गया | fell down |
| **मृतः** | – | मर गया | died |
| **चोक्तम्** (च + उक्तम्) | – | और कहा गया है | and said |
| **दुर्जयः** | – | कठिनता से जीतने योग्य | difficult to win |
| **बहूनामप्यसाराणाम्** (बहूनाम्+अपि+असाराणाम्) | – | अनेक निर्बलों का | several weak ones |
| **समवायः** | – | समूह, संगठन | group |












1. **प्रश्नानाम् उत्तराणि एकपदेन लिखत-**

(क) वृक्षे का प्रतिवसति स्म?

(ख) वृक्षस्य अधः कः आगतः?

(ग) गजः केन शाखाम् अत्रोटयत्?

(घ) काष्ठकूटः चटकां कस्याः समीपम् अनयत्?

(ङ) मक्षिकायाः मित्रं कः आसीत्?

2. **रेखाङ्कितानि पदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) कालेन चटकायाः सन्ततिः जाता।

(ख) चटकायाः नीडं भुवि अपतत्।

(ग) गजस्य वधेनैव मम दुःखम् अपसरेत्।

(घ) काष्ठकूटः चञ्च्वा गजस्य नयने स्फोटयिष्यति।

3. **मञ्जूषातः क्रियापदानि चित्वा रिक्तस्थानानि पूरयत-**

| करिष्यामि | गमिष्यति | अनयत् | पतिष्यति | स्फोटयिष्यति | त्रोटयति |
|---|---|---|---|---|---|

(क) काष्ठकूटः चञ्च्वा गजस्य नयने ..................... ।

(ख) मार्गे स्थितः अहमपि शब्दं ..................... ।

(ग) तृषार्तः गजः जलाशयं ..................... ।

(घ) गजः गर्ते ..................... ।

(ङ) काष्ठकूटः तां मक्षिकायाः समीपं ..................... ।

(च) गजः शुण्डेन वृक्षशाखाः ..................... ।







© NCERT not to be republished

## 4. प्रश्नानाम् उत्तराणि एकवाक्येन लिखत-

(क) चटकायाः विलापं श्रुत्वा काष्ठकूटः तां किम् अपृच्छत्?

(ख) चटकायाः काष्ठकूटस्य च वार्तां श्रुत्वा मक्षिका किम् अवदत्?

(ग) मेघनादः मक्षिकां किम् अवदत्?

(घ) चटका काष्ठकूटं किम् अवदत्?

## 5. उदाहरणमनुसृत्य रिक्तस्थानानि पूरयत-

(क)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| यथा- प्रथमपुरुषः | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| प्रथमपुरुषः | ................. | पतिष्यतः | ................. |
| प्रथमपुरुषः | ................. | ................. | मरिष्यन्ति |

(ख)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| यथा- मध्यमपुरुषः | गमिष्यसि | गमिष्यथः | गमिष्यथ |
| मध्यमपुरुषः | ................. | धाविष्यथः | ................. |
| मध्यमपुरुषः | ................. | ................. | क्रीडिष्यथ |

(ग)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| यथा- उत्तमपुरुषः | लेखिष्यामि | लेखिष्यावः | लेखिष्यामः |
| उत्तमपुरुषः | ................. | हसिष्यावः | ................. |
| उत्तमपुरुषः | ................. | ................. | द्रक्ष्यामः |





© NCERT not to be republished





**6. उदाहरणानुसारं 'स्म' शब्दं योजयित्वा भूतकालिकक्रियां रचयत-**

| | | |
|---|---|---|
| यथा-अवसत् | - | वसति स्म। |
| अपठत् | - | ....................। |
| अत्रोटयत् | - | ....................। |
| अपतत् | - | ....................। |
| अपृच्छत् | - | ....................। |
| अवदत् | - | ....................। |
| अनयत् | - | ....................। |

**7. कोष्ठकात् उचितं पदं चित्वा रिक्तस्थानानि पूरयत-**

(क) ...................... बालिका मधुरं गायति। (एकम्, एका, एकः)

(ख) ...................... कृषकाः कृषिकर्माणि कुर्वन्ति। (चत्वारः, चतस्रः, चत्वारि)

(ग) ...................... पत्राणि सुन्दराणि सन्ति। (ते, ताः, तानि)

(घ) धेनवः दुग्धं ...................... । (ददाति, ददति, ददन्ति)

(ङ) वयं संस्कृतम् ...................... । (अपठम्, अपठन्, अपठाम)

© NCERT not to be republished





